


# प्रजाप्रभुते !



केयं ते विषमगतिः प्रजाप्रभुते !
केयं ते नयवियुतिः कृपावियुते ! ॥

देशान्तरे सुपूजितेति लोकान्तरे पराजितेति,
कालान्तरे फलिष्यसीति वेलान्तरे धरिष्यसीति,
आशयाऽनीशया पेशलेनाशयेन वृतासि हे पिशाचि ! ॥ केयं ॥

खण्डखण्डान्तराण्याहिण्ड्य तद्राजमुंडमंडलमालिनी,
भंडतंडावेशितचंडशक्तिसुराभांड़ा,
चंडिके ! प्रजाविनाशिन्यकांडप्रलयं विधास्यसि ? ॥ केयं ॥

मन्त्रिणः परिवर्तयसि पुनस्तंत्रिणः प्रतिष्ठापयसि,
राष्ट्राणि भ्राष्ट्रे भर्जयसि कष्टानि प्रतिक्षणं वर्धयसि,
पक्षलक्ष्यसाधनभेदान् प्रतीपयसि मनस्सु भृशं ॥ केयं ॥





## मतनिरपक्षं राज्यम्



किं नाम मतम् ? प्रायशः आत्मविषये परलोकविषये च अभिप्राय एव मतमित्युच्यते। अत एव हैन्दवमतं, महम्मदीयमतं, क्रैस्तवमतमित्यादिव्यवहाराः प्रसिद्धा वर्तन्ते। तेषां मतानां विभेदः देशविनाशकारणमिति मत्वा देशनेतारः भारतीयराज्यं मतनिरपेक्ष राज्यमिति प्राकाशयन्। अत एव मतान्तरीकरण-प्रसंगेषु प्रभुता तूष्णींभावमालम्बते। प्राथमिकमाध्यमिकोन्नतादिविद्याशालासु हैन्दवासु पारलौकिकपरमात्मविषयकबोधनस्य अनवकाशमकल्पयत। क्रैस्तवानां च शालासु तु ते नियतं स्वमतं प्रचारयन्तीति यथाशक्ति हैन्दवानां बालानां मनस्सु आत्ममतप्रवणतां कल्पयन्तीति च सुविदितमेव। तथैव महम्मदीयानां शालासु आत्मसंस्कृतिबोधः निरातंकं प्रचलत्येव। एतेन हैन्दवा विद्यार्थिन एव असंस्कृता अन्यसंस्कृता वा आत्मप्रत्ययविहीनाः नाममात्रभारतीयास्संपद्यन्ते। बाल्यात्प्रभृति सत्संस्काराभावात् प्रत्युत दुस्संस्कारवासितत्वाच्च प्रवृद्धानामपि हैन्दव-बालकानां आस्तिक्यबुद्धिः न समुदेति।

एतमेव भवतु किं नः छिन्नं ? इति केचिद्ब्रूयुः। अहं तान् प्रतिपृच्छामि-एतदर्थमेव किं अस्माभिः स्वातन्त्र्यमवरोवृतः ? आत्मसंस्कृतेः विनाशः आत्मविद्यायाः प्रलयः, आत्मविश्वासानां विलयः, आत्मशान्तेस्समुपद्रवः इत्यनिष्टपरंपरैव किमु वृतऽऽ-स्माभिः ? अस्तु आध्यात्मिकविषयोपद्रवः, भौतिकोपद्रवाणां निवारणमेव वा न दृश्यते दृष्टिपाताभ्यन्तरे।

एकः प्रभुः प्रपलायितः, सहस्रं तु ते समुत्पादिताः। एकं शासन-मस्तमितं किन्तु बहूनि तानि उद्यतानि। एकः करः संकोचितः, किन्तु बहवस्ते प्रसारिताः। देवायतनानि ध्वस्तानि पैशाचिकमतानि प्रचारितानि। आक्रामकाणा-

मेव तदाक्रान्तं वस्तु, न संपादकस्येति साक्षात्परंपरया वा उद्घोष्यते। बलहीना बलिभिः, एकोऽनेकैः, धनी निर्धनैः आक्रम्यते। एतादृशदुराक्रमणस्य साम्यवाद-समाजवाद-प्रजावादादि विरुदानि समर्प्यन्ते। अन्ततस्तु अयं अलसानां दुश्चर्या-विलास एव परिस्तीर्यते।

न धर्मस्य निकषः समुपलभ्यते। खण्डान्तरे यदाचर्यते तदेव परम-प्रामाणमिति निश्चीयते। देशकालपात्रानुकूलतयाः प्रसंग एव अत्र भूम्यो भवति।

राजकीयमतानि तु आत्ममतेभ्योऽधिकानि अद्य विद्योतन्ते। तेषां मातानां प्रचारकाः भारते बहवस्समुपलभ्यन्ते। परदेशवित्तेन परकीयचित्तेन च जीवन्तस्ते पदे पदे सर्वकारं कम्पयन्ति, प्रजा अभिद्रुह्यन्ति च।

यद्यपि भारतदेशेऽद्य बाहाबाहवि युद्धानां अभावेऽपि कूटयुद्धानि बहूनि प्रवर्तन्त एव। हरियाणावंग-उत्तरप्रदेशादिषु क्षणे क्षणे पक्षपरिवर्तनं, अथवा मतपरि-वर्तनं, सर्वकारोपद्रवः, पतनोत्पतने च विचित्रतया सम्भवन्ति। एतादृशैः परिवर्तनैः अनिश्चितपरिस्थित्या च देशस्य यादृशी हानिर्भवति न तादृशी न तत्र शतांशिकी वा आध्यात्मिकमतभेदैः। किन्तु आध्यात्मभावनायाः अभिवर्धने ऐकमत्य-मेव जनेषु दृढमूलमभविष्यत्। तदभावेव स्वार्थपरा नायकम्मन्याः स्वस्वसंकल्पितं कार्यं साधयितुं प्रजाः प्रपीडयन्तः देशद्रोहेपि न लज्जन्ते। राजकीयमतभेदपिशचिकाविष्टाः ते आत्मपदवीमात्रसंरक्षणातत्पराः जनानामाक्रन्दनानि आगणयन्तः तत्सम्मतिलाभ-पर्यन्तं तत्पादौ अभिवन्द्य वांछिते निर्वृत्ते तच्छिरांस्येवाधिरुह्य विकृतनाट्यमाचरन्ति। कार्मिकान् चोदयन्ति, विद्यार्थिनः प्रोत्साहयन्ति, घातुकान् प्रसरयन्ति प्रजामण्डले। कल्लोले बहुले हतप्रतिहतेषु बहुषु जनेषु नष्टे च बहुले प्रजाद्रव्ये सान्त्वयन्ति संधानाय यतमाना इव स्वसमीहितं साधयन्ति, स्वबलं प्रकटयन्ति। हा न गणयन्ति वराकाः एते प्रजापीड़ां महतीम।

एवं विचार्यमाणे न प्राचीनमतभेदाः देशनाशकाः नैवभवन्तीति सुविदितम। आत्मविषयक विश्वासभेदाः ज्ञानिनां आत्साधनभेदमात्रपर्यवसन्नाः अनुपद्रवा एव संपद्यन्ते। एते राजकीयमतभेदास्तु न तथा। अपितु बालान् वृद्धान् पुरुषान् स्त्रियः मूढांश्च अपमार्गे प्रवर्त्य निरपराधिनां सदुपकरिणां विवेकिनां

च जनानां अभिघातं, प्रजोपयोगिनां वस्तूनां क्षेत्राणां यन्त्राणां मर्गाणां च सर्वनाशमुत्पादयन्ति ! एतेन च अराजकतैव अभिवर्धते सर्वत्र भारते ।

यदि दैवभीतिः अभविष्यत् परलोके विश्वासः धर्माधर्मविवेको वा यदि च स्वकृतकर्मणः अस्मित् लोके एव भविष्यन् परिणामः अभ्यूहेतः तर्हि एतादृशनां दुष्कार्याणां भारतदेशनाशकानां अथवा अत्मनाशकानां कार्याणां करणे प्रवृत्तिरेव कस्यापि नाभविष्यत !

अतः प्रार्थये नायकान् प्रजाश्च-यत् राजकीयमतभेदान् दूरीकृत्य, देशरक्षणाभिवर्धनोपाय एव भारतीयानां राजकीयं मतं भवतु । आत्मविषयकमतानां विश्वासानां मवसि दृढतापादन एव मनश्शान्तिः पापाप्रवृत्तिश्च भवेदिति तेषां व्यापनमेव सर्वतोस्तु । नास्तिकता च नश्यतु सर्वेषां च मतानां लक्ष्यं तु एकमेव भवतीति हेतोः तत्सामरस्यप्रख्यापनेन जनास्सर्वेपि सहोदरभावभाविताः क्रियन्ताम् !

योगक्षेमो नः कल्पतां !



# सुलभपाठमाला ३४

## आपणः ५

अयं आभरणापणः। अत्र बहूनि आभरणानि सुवर्णमयानि रजतमयानि च सन्ति। अत्र अंगुलीयकानि अंगुलीभूषणानि वर्तन्ते। एतानि सुवर्ण-निर्मितानि। केषुचित् रत्नानि स्यूतानि, अन्येषु च वर्णच्छुरणं वर्तते अपरे, तु साधरणतया वर्तन्ते। एतानि वलयानि स्त्रीणां मणिबन्धभूषणानि। एषु विविधाः शिल्पक्रियाः प्रकाशिता वर्तन्ते। एतान्यङ्गदानि प्रगंडमलंकुर्युः। एतानि नागफणयालंकृतानि रत्नोत्कीर्णान्यनुत्कीर्णानि च अत्र दृश्यन्ते। एते कण्ठहाराः शृंखला इत्यप्युच्यन्ते। आसु शृंखलासु विविधा रूपरेखाः दृश्यन्ते। अत्र एषा मरिचशृंखला, एषा गोवर्धनशृंखला, एषा रज्जुशृंखला। एवं प्राति-स्विकीनां तासां रूपानुगुणानि नामानि कल्पितानि। एषा टंकहारः। अत्र नाणकाकाराः सुवर्णखंडाः स्यूताः विराजन्ते। एषा मौक्तिकमाला, एषा प्रवाल-माला, एषा रत्नमाला। एतासु च मौक्तिकादीनि सुवर्णसूत्रेण आबद्धानि वर्तन्ते। अयं चन्द्रहारः चंद्रवत् स्त्रीणां कण्ठमलंकरोति। एतत् ग्रैवेयकं, कण्ठमाश्रित्य तमलंकरोति। एषा मेखला। इयं रजतमयी, सुवर्णमयी, रत्नमयी च वर्ततेऽत्र। मेखलायाः पुरोभागे किंकिणीनां समावेशोपि वर्तते अवधानेन वीक्षस्व। एताः नारीणां कटिं भूषयन्ति। एतानि कुंडलानि रत्नखचितानि कर्णौ भूषयन्ति। एतानि लोलकानि कर्णयोः डोलायमानानि अलंकुर्युः। एतानि कर्णवलयानि एष नासामणिः। अयं नासिकातः लम्बमानः भूषति। एतानि नासापुष्पाणि नासिकायाः उभयतः स्थित्वा शोभां जनयेयुः। एषा ललाटिका फालभागे लम्बमाना शोभयति। एष चूडामणिः शिरोभागं अलंकरोति। एषा चन्द्ररेखा एषः च सूर्यबिंबः। एतौ च शिरसि सीमन्तस्य उभयतः स्थित्वा अलंकारविशेषं जनयन्ति। एते जटागुच्छाः स्वर्णपुटपिहितशिरस्काः लंबितनीलकौशेयसूत्र-गुच्छाः जटान्ताभरणानि भवन्ति। एते हंसकाः पादकटकाः रजतमय्यः। एतानि नूपुराणि राजतानि प्रपदाभरणानि भवन्ति। एतानि पादांगुलीयकानि।

# मातृसान्त्वनम्

## श्री वेमूरि आञ्जनेयशर्मा

अम्ब त्वामविचार्य मूढमनसः कष्ट! मृतां मन्वते
निन्दन्त्येवमपि, त्वयैव मधुरां वाचं च ये शिक्षिताः ।

दुश्शीला भवदीयपुत्रहतका इत्येतदस्वादु यत्
स्वान्तं मे तुदति प्रगाढमखिलव्याहारसंजीवनि ॥

सुसंस्कृतां संस्कृतिहीनवृत्तिनः कृतघ्नभावाः सकलोपकारिणीम् ।
उदारभावामनुदारचेतसो वदन्ति केचिद् भवतीं मृता इति ॥

ये बभूवुः पुरा पूज्या महात्मानो महर्षयः ।
परतत्त्वप्रवक्तारः सर्वशास्त्रकृतश्च ये ॥

वाल्मीकिव्यासमुख्याश्च काव्यनिर्माणकोविदाः ।
ते सर्वे भवतीमेव बहुमानपुरस्सरम् ॥

बहुधाऽऽराधयाञ्चक्रुः पुनाना रसनाः स्वकाः ।
किं विस्तरेण वाणीशः परमेष्ठी सुभाषिणि ॥

वदनैस्त्वां समुच्चार्य कृतार्थं स्वममन्यत ।
अद्यापि श्रुणुमो देवि दिव्यं श्रुतिशिरोवचः ॥

त्वन्मुखेनैव वदतो वेदर्षीनजरामरान् ।
तथैव भाविनोऽप्येवं श्रोष्यन्त्येव न संशयः ॥

अनुत्तमा संस्कृतिरस्मदीया त्वय्येव भद्रं निहिता पुराणी ।
गीताऽस्यतः संस्कृतभारतीति निःशेषवाक्संस्करणाच्च हेतोः ॥

महिमानमनादृत्य तव जल्पन्ति केचन ।
मृतमेषा मृतेति त्वाममृतां मृतजीवनीम् ॥

आसीत्पुरा नूनमनूनलक्ष्मीस्तवाम्ब साऽद्यापि न नष्टरूपा ।
अहीनभूत्यौ सुपरिश्रमान्नः कल्याणमस्यै भवताद् भविच्यै ॥

—:०:—

# संस्कृतं भारतीयराष्ट्रियता च

**डा० रामजी उपाध्यायः**, एम. ए., डी. लिट्. सागर.

भारतस्यैकताद्य वर्तते। सा कथं कदा वा सम्पादितेति विचारे समुपस्थिते सर्वङ्कषो विमर्शो जायते यदुपक्रमेऽस्मिन् नास्ति तत्राङ्गलानां तेषां भाषाया अनुयायिनां वा कृतित्वम्, अपितु तेषां भारते प्रदुर्भावात् प्राक् किमपि तत् तत्त्वमासीत् सुप्रकटितं येन निःसन्दिग्धमिदं प्रोक्तम्—

उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम्।
वर्षं तद् भारतं नाम भारती यत्र सन्ततिः॥

बहुविधजनानां देशेऽस्मिन् सा भारतीया संस्कृतिर्विकसिता यस्या आदर्शमात्मनीनं कर्तुं ते सर्वे जनाः परस्परं साहचर्यं विदधुरिति भारतीयसंस्कृतेः प्रतिष्ठायाः प्रथमं पदम्। इयमेव भारतीयसंस्कृतिर्भारतस्यैकराष्ट्रियत्वमपि विहितवती। वस्तुतस्तु न कश्चिद्देशो भौगोलिकसीमाभीराष्ट्रमिति नामविशेषमर्हति, अपितु केनापि संस्कृतिविशेषेण कस्यचिद् भूभागस्य राष्ट्रसंज्ञेति विशेषो जायते। सा संस्कृतिः प्रधानतः संस्कृत-साहित्ये गौणत इतरभाषासाहित्येषु च निहिता वर्तते। यदि नाम संस्कृतमपरा भारतीय-भाषा वोपेक्षिताः स्युः तर्हि भारतीया संस्कृतिरपि मूलत उच्छिन्ना भविष्यति। फलतो भारतस्य भरतीयतापि विनष्टा जायेत। आंग्लभाषाद्वारेण या अन्ताराष्ट्रियसंस्कृतिः प्रचार्यते, तस्याश्चाकचक्येन भारतीया संस्कृतिं विनाशयितुमेवाङ्गलभाषासमर्थकानां प्रश्नः प्रवर्तते।

स्वकीया राजनीतिकी वा सामाजिकी वा संस्कृतिः परेषु देशेषु स्थिरं पदं निदध्यादिति आधुनिकयुगे सर्वेषां प्रबलराष्ट्राणां परमोद्योगो वर्तते। इदमेवोद्दिश्य इङ्गलैण्ड - अमेरिका - जर्मनी - रूसादि — देशानां न केवलं सार्वजनिकासंस्था अपितु शासन-संस्था अपि भारतदेशे स्वल्पमूल्येनोत्कृष्टसाहित्यं विक्रीणन्ति, भारतीयविद्यार्थिनां स्वकीयेषु देशेषु अध्ययनार्थं समृद्धां छात्रवृत्तिमुपहरन्ति, स्वकीयदेशस्य भाषा-संस्कृतीतिहासादीनां विषयाणामध्यापनार्थं प्राध्यापकान् नियोजयन्ति। 'फोर्ड फ्राउण्डेशन' इति विख्याता संस्था तदेवोद्देश्यं परमं कृत्वा प्रपंचिता।

राष्ट्रभाषाद्वारेण राष्ट्रिया संस्कृतिः संस्थपनीया यतो नाम राष्ट्रिय-संस्कृतिं विना राष्ट्रस्य राजनीतिकमेकत्वमपि स्वाप्नसृष्टिर्भविष्यति, भारतस्य विघटनमवश्यं भविता च। सा राष्ट्रिया सस्कृतिः केवलं भारतीयभाषासु सन्निहिता वर्तते। अत एव तासां सर्वासां भाषाणामध्ययनमध्यापनं सविशेषं व्यवस्थापनीयम्। अधुना तासु केवलं संस्कृतस्य माहात्म्यं भारते सर्वत्र राजते। सा भाषा सर्वासां भारतीयभाषाणां जननीरूपेण वा सहचरीरूपेण वा समादृता। अस्मकं राष्ट्रिय-साहित्यं प्राचीनकालतोऽद्यावधि सविशेषं संस्कृतभाषायामेव वर्तते। नातः परं किमपि सत्यम्। हिन्दी-भाषायामन्यासु वा भारतीयभाषासु सन्ति नामांगुलिगणनीया एव राष्ट्रिय-साहित्य-कक्षा-योग्या ग्रन्थाः। अथ च शतशो ग्रन्था वेदोपनिषद्रामायण-भारतपुराणादयः, अन्ये वा बहुविधविषय स्पृशो महाकवीनामाचार्याणां च संस्कृतग्रन्था राष्ट्रिय-साहित्य कोटिमवगाहन्ते। न केवलं भारतीयभाषासु भाविसाहित्यस्य निर्माणार्थमपितु भारतमिति नाम्नः सार्थकतां विधातुमपि संस्कृतभाषाया राष्ट्रियं साहित्यं महनीयम्।

आंगलभाषाया अनिवार्यमध्यापनं तु दुराग्रह एव यतो नाम कापि वैदेशिकी भाषा कस्मिंश्चित् स्वतन्त्रदेशेऽनिवार्यरूपेण न ध्रियते। आंग्लभाषा तु केवलं तैर्जनैः पठनीया ये अन्ताराष्ट्रियज्ञान-विज्ञान-समुपासका अन्ताराष्ट्रियां ख्यातिं लब्धुं समुत्सुकाः सन्ति।

आंग्लभाषा तु भारतीय-संस्कृतेः प्रोच्चाटनी वर्तते। यदि नाम आंग्लभाषाया भारते सर्वोपरि स्थाने क्रियते, तर्हि त एवाङ्गल-साहित्य-संस्कृतिरंजिता जना देशेऽस्मिन् प्रामुख्यं भक्ष्यन्ते, येषामादर्शेन साहचर्येण च वैदेशिकी संकृतिर्देशेऽस्मिन् सनातनपदं लप्स्यते। सा स्थितिस्तु भारतस्य भारतीयतामेवाचिरेण निराकुर्यात्।

—: ० :—

## प्लवङ्गदक्षिणायनपरीक्षायां सर्वप्रथमतया उत्तीर्णाः



परिचयः
बि. उमा
नंगनल्लूरु



विचक्षणः
एन्. कन्नन्
तिरुनगर, मदुरै



अभिज्ञः
मीनाक्षिसुन्दरम्
तञ्जावूरु

# प्लवङ्गोत्तरायणपरीक्षाणां कालसूची

| परीक्षाः | 9—3—1968 | | 10—3—1968 | | 11—3—1968 |
|---|---|---|---|---|---|
| | प्रातः | सायम् | प्रातः | सायम् | प्रातः |
| परिचयः | -- | — | परिचयः | — | — |
| अभिज्ञः | — | — | प्रथमं पत्रम् | द्वितीयं पत्रम् | — |
| विचक्षणः | — | प्रथमं पत्रम् | द्वितीयं पत्रम् | तृतीयं पत्रम् | — |
| समर्थः | प्रथमखण्डे प्रथमं पत्रम् | प्रथमखण्डे द्वितीयं पत्रम् | द्वितीयखण्डे प्रथमपत्रम् | द्वितीयखण्डे द्वितीयं पत्रम् | — |
| कोविदः | प्रथमखण्डः | द्वितीयखण्डः | तृतीयखण्डः | चतुर्थखण्डः | पञ्चमखण्डः |

सं. भा. प्र. सभा, चित्तूरु,
6—12—1967.

की० श्रीनिवासाचार्यः,
परीक्षामन्त्री

श्रीलक्ष्मीनृसिंहपरब्रह्मणे नमः

# श्रीलक्ष्मीनृसिंहशतकम्

## पैत्तंबाडि॰ महाकवि॰ व. रामानुजाचार्यविरचितम्

—: मङ्गळदशकम् :—

श्रियं दिशतु नः श्रीमान् मालोलोऽहोबिलेश्वरः ।
गत्वा प्रतिपुरग्रामं योऽद्याप्यवति मानवान् ॥

श्रीनृसिंहांकगां लक्ष्मीं वन्दे वांछितसिद्धये ।
प्रह्लादं या पुरस्कृत्य भर्तुरौग्र्यमशामयत् ॥

विश्वरक्षणकर्तारं वेत्रचालनतो हरेः ।
विष्वक्सेनमनीकेशं वन्दे सूत्रवतीसखम् ॥

द्राविड्यश्रुतयो यस्य वकुळामोदवासिताः ।
प्रपन्नकुलकूटस्थं शठकोपमुनिं भजे ॥

अखिलभुवनजन्मेत्यादिभिः श्रीनृसिंहे
श्रुतिशिरसि विदीप्ते श्रीनिवासेन पूज्ये ।
मतिरिति मम येनास्त्वर्थ्यते भक्तिरूपा
यतिकुलतिलकं तं भाष्यकारं नमामि ॥

स्तोत्रेषु यो बहुषु चापि रमा नृसिंहं
कामासिकाष्टकत एव च वेदवेद्यम् ।
तुष्टाव शर्वमुखदेवगणाभिवन्द्यं
वेदान्तदेशिकगुरुं तमहं प्रपद्ये ॥

यः श्रीमद्धटिकाशताख्यवरदाचार्यांघ्रिपद्माश्रितः
प्राप्य श्रीमदहोबिलं यतिवरो लक्ष्मीनृसिंहार्चनम् ।
शिष्याणां श्रुतिमौळिसंप्रवचनं चक्रे तमाद्यं गुरुम्
श्रीमन्तं शठकोपसंयमिवरं श्रेयोनिधिं संश्रये ॥

यत्पादपद्मद्वयसंश्रितानां भक्तिः पराऽहोबिलमानृसिंहे ।
संश्रूयते त शरणं प्रपद्ये श्रीरंगरामानुजसंयमीन्द्रम् ॥

प्रख्याते गरुडपुरं श्रीमत्स्वामीति मद्वरो यस्मिन् ।
निक्षिप्तस्सोऽव्यान्मां शान्तः श्रीवाससंयमीन्द्रगुरुः ॥

यच्छ्रीमत्करुणाकटाक्षलहरीसंलब्धसारस्वत-
श्चक्रेऽहं बहुरूपकाण्यपि नवं लक्ष्मीसहस्रस्तवम् ।
अन्यांश्चापि तदा तदा कृतिगणांछ्रीतातपादो मम
श्रीमानादिवराहसूरिरधिकां वात्स्यो दिशेत्संपदम् ॥

॥ इति मंगळदशकम् ॥



## —: अथ प्रार्थनादशकम् :—

अहोबिलमठाधिपैः क्वय तिधूर्वहैस्संस्तुतः
विपश्चिदविपश्चिमैस्त्वमतिभीष्मरूपो हरे ।
क्व बालमतिरप्यहं भयकृशः प्रवृत्तस्तुतौ
अथापि कुरु वांछितं सफलमद्य भक्तस्य मे ॥

कृत्वाऽहं बहुरूपकाण्यपि भवत्पत्नीसहस्रं नवं
श्रीलक्ष्मीनरसिंह ते स्तुतिमिमां कर्तुं प्रवृत्तोऽधुना ।
देवारातिहिरण्यदानवकृतात्युग्राकृतौ निर्भय-
स्तन्मे देहि तव स्तुषाविलसितं जिह्वातटे निर्मलम् ॥

लक्ष्मीनृसिंह तव पादसरोजभृङ्ग-
स्तद्दिव्यमंगळगुणामृतपानसक्तः ।
तृप्तो भवेदिह यथा मयि संविधेहि
कारुण्यशीकरकटाक्षपरंपरां त्वम् ॥

रमालोल भक्ते क्षमास्थाः प्रियायाः
नवाब्जालयायास्तवांगासनायाः ।
नृपालादिसेव्यं कृपार्द्रावलोकं
त्वयि न्यस्तभारे मयि त्वं विधेहि ॥

कलिबलकलुषेऽस्मिन् दुर्जनैर्ग्रस्तकाले
भवजलधिगतानां मादृशानां जनानाम् ।
दुरितजलनिधीनां रक्षणायावतीर्ण-
श्शरणमशरणानां त्वं भव श्रीनृसिंह ॥

ब्रह्मादिदेवैरपि दुर्निरीक्ष्यं हिरण्यदैतेयवधार्थक्लृप्तम् ।
सटाछटाभिः प्रसृताभिरेतत् नृसिंह सौम्यं कुरु भीष्ममास्यम् ॥

नृसिंहमूर्ध्ना मणिपादुके ते समुद्वहन सांजलिबन्धमेवः ।
याचेऽसकृत् जन्मतरुं समूलं छिन्धि क्षमायामपुनःप्ररूढम् ॥

पुनःपुनस्ते प्रणिपत्य याचे लक्ष्मीनृसिंहांघ्रिसरोजयुग्मे ।
आचार्यसन्न्यस्तभरस्य मेऽद्याऽपराधहीनं कुरु किंकरत्वम् ॥

आचार्यवर्यैर्निहतात्मरक्षाभरस्य मे भीर्नह जन्मचक्रात् ।
अथापि कैंकर्यविवृद्धये ते प्रियाकटाक्षं मयि संविधेहि ॥

लक्ष्मीनृसिंह भुवि वैदिकलौकिकानि
कर्माणि कर्तुमखिलान्यपि नैव नोऽद्य ।
शक्यानि यत्प्रियतमाकरुणाकटाक्ष-
पातं विना तव स एव हि याचनीयः ॥

॥ इति प्रार्थनादशकम् ॥



## —: अथ मन्त्रराजदशकम् :—



रे बाल कुत्रास्ति हरिस्त्वयोक्तस्तम्भं तताडेति हिरण्यदैत्यः ।
"उग्रा"ऽऽकृतिर्यस्तु तदाऽऽविरासीत्तं श्रीनृसिंहं शरणं प्रपद्ये ॥

युद्धाय सन्नद्धमसुं निरीक्ष्य क्षिप्रं नृसिंहस्सुरवैरिराजम् ।
सन्दर्शयामास च वीररूपं आकृष्य तं योऽवतु मां हरिस्सः ॥

व्याप्य सर्वत्र तिष्ठन्तं यमपश्यत्सुराररिराट् ।
तं नमामि महाविष्णुं मालोलं नृहरिं सदा ॥

अनेककोट्यर्कसमप्रभं यत्तेजोऽप्यभूद्द्रष्टुमशक्तः ।
हिरण्यदैत्यस्तमहं ज्वलन्तं ज्वालानृसिंहं सततं स्मरामि ॥

गर्वतस्स्वतपसां बलादसौ पूर्वदेवपतिरद्भुताकृतिम् ।
खर्वबुद्धिरतुलं ददर्श यं "सर्वतोमुख"महं भजे हरिम् ॥

स्फुटितस्तम्भोद्भूतं बभूव तेजोमयं महातत्त्वम् ।
दैत्यश्शंकितचित्तो यं च "नृसिंहं" विलोक्य सोऽव्यान्नः ॥

खरतीक्ष्णतरैर्नखैरैस्सटाछटाभिश्च दन्तपंङ्क्तिभिः ।
भीषणममरारीणां भयापनुत्यै भजामि मे नृहरिम् ॥

विनिहतहिरण्यकशिपुः प्रशान्तकोपानलोस्तु नो हृदये ।
प्रह्लादबालतुष्ट्यै भद्रोऽभूद्यस्सदा रमालोलः ॥

मर्त्यादीनां च योमृत्युर्लये तस्यापि यस्स्मृतः ।
स लक्ष्मीनृहरिर्नोऽस्तु मृत्युमृत्युरमृत्यवे ॥

श्रीमत्महोबिलक्षेत्रे मन्त्रराजेऽपि मूर्तयः ।
यस्य भान्ति न वा प्येतं तं नृसिंहं नमाम्यहम् ॥

॥ इति मन्त्रराजदशकम् ॥



# अस्मत्प्रचारकमन्त्री दिवं गतः



श्री नेति॰ सुब्बरायशास्त्री

यो मदीयसहाध्यायी यो मदीयसहचरः यो मदीयप्राणमित्रं य एतस्याः संस्कृतभाषाप्रचारिण्याः सभायाः प्राणाः, विख्यातयशाः दृढदीक्षः कार्यदक्षश्च आसीत्स सुगृहीतनामामधेयः श्री नेति सुब्बरायशास्त्री स्वीये-गुण्टूरु नगरे 28–11–67 दिने अस्तंगत इति प्रकाशयितुं खिद्यते अत्यन्तं मे चेतः ।

एतेन महाभागेन स्वगुरूणां श्री गा. हनुमच्छास्त्रिपादानां सम्मानोत्सवोऽनितरसाध्यतया निर्व्यूढः, संस्कृतसम्मेलनं च गुंटूरुनगरे निर्वर्तितं महावैभवेन ।

अपि च गुण्टूरपुर एव प्राच्यकलाशाला एतेन महाभागेन नागरिकदातृसाहाय्येन षड्वर्षपर्यन्तं चाभियोगादिकानुपद्रवान् सोढ्वा अनुदानाद्यभावेपि तद्विलम्बेपि वा यथाक्रमं अध्येत्रध्यापकादीनां पोषणेन निर्व्यूढा आत्मा क्लेशितश्च ।

संस्कृतसभायास्तु अस्य महाशयस्य सेवा अनिर्वर्णनीया अनितरसाध्या अस्ति । बहुकालं प्रकाशकमन्त्रिपदं अलंकृत्य बहूनि सभासम्बन्धीनि पुस्तकानि अनेन प्रकाशितानि । तत्रापि व्यासमञ्जरीति पुस्तकं बहुपण्डितलेखसङ्कलनरूपं प्रथते । ततश्च प्रचारकमन्त्रिपदे स्थित्वाऽनेन बहूपकृतं सभायै प्रचारक्षेत्रे आर्थिकविषये आधिकारिकस्तरे च । अनेन नैकोपि विश्वपरिषत्समावेश उपेक्षितः स्वानुपस्थित्या । नियमेन तत्र सन्निधाय एतत्सभायाः प्रचारः संवर्धितः, महद्भि-र्विद्वद्भिस्सह सभायाः संबन्धः परिकल्पितः ।

एतादृशसंस्कृतवाणीपादपद्माराधकः आत्मकुटुम्बमिव संस्कृतकुटुम्बं सुदुःखयन् परलोकप्रवासितोभूत ।

कथं वा सांत्वयामि दुःखदिग्धान् तत्पत्नीं पुत्रं वा तत्समानदुःखोहं निष्क्रियः ।

केवलं प्रार्थये भगवन्तं रमारमणं तत्कृतदिव्यभाषासेवामालक्ष्य दिव्यलोके भव्यतया तं सभाजयितुम् ।

ति. कं. तिरुवेङ्कटाचार्यः,
प्रधानमन्त्री.



# मातृहृदयम

श्री कल्लूरि० हनुमन्तरावः

नगरवेश्याजनमकुटायमानाया हेमलतायाः सौधप्रांगणे शंकरो नाम कश्चित् विटस्स्थित्वा एवमाचुक्रोश — "यथा कृष्णः सख्याः प्रियं कर्तुं नन्दनवनात् पारिजातपुष्पाण्याजहार तथा गृहात् सर्वाभरणानि शिक्ययोर्भारयष्ट्या मया आनीतानि । शीघ्रं द्वारमपावृणु । मय्यत्र तिष्ठतियुगा व्यतीयुः । इदं द्वारं मरुभूमिरिव शून्यमस्ति । आभरणानां भारेण भारयष्टिर्मां बाधते । आवयोरन्तरा इयं भित्तिः जन्मांतरमिव स्थिता । नीरवशून्यसमुद्र इव प्रतिवचनं न ददासि । शीघ्रं द्वारमपावृणु" इति ।

तस्य परिदेवनं श्रावं श्रावं तस्याः माता पश्चाद्द्वारेण बहिर्निपत्य तत्रागत्य "को भवान् ! पक्षिण इवाल्पा भवतो मूर्तिः । स्कन्धे महान् भारः स्थापितः । भारो मम हस्ते दीयताम्" इत्युक्त्वांजलिं बध्वा स्थिता । शङ्करः सर्वाण्यप्याभरणानि तस्याः हस्ते प्रदाय "श्रूयताम् । तव दुहितुरर्थं त्रीनपि लोकान् वहेयम् । तस्या-वियोगं तु क्षणार्धमपि तिलार्धमपि वोढुं न शक्नोमि ।"

तस्मिन् समये गृहांतरात् हेमलतायाः कठोरा वागश्रावि – "मातः ! तेन दत्तानि महाभरणानि तस्मै प्रयच्छ । यथाऽऽगतं तथा तेन गम्यताम् । आवयोः प्रणयकथा अवसितेति स उच्यताम्" इति । वेश्यमाता शङ्करं दृष्ट्वा "युवयोः प्रणयकलहः शीघ्रमवसीदतु । वर्धतां युवयोः प्रेमा" इत्युक्त्वाऽपससार ।

अनन्तरक्षणे हेमलतायाः सौधपुरःकवाटौ कटकटशब्देन सहापावृतौ । "कथं भवता पुनरेवमागतम् ? किं भवान् प्रत्यजानात् किमधुना क्रियते ? यदि

मम हृदयं वांछितं भवन्मातृहृदयमेवानीयताम् । मदनेन शपे । आभरणान्यहं नैव कांक्षे । हेमदासी नास्मि, प्रेमदास्यहम् । यदि नाम प्रेमपूर्णं मम हृदयं वांछसि त्वन्मातृहृदयमेवानयं । नो चेद् गच्छ" गभीरं उक्त्वा हेमलता हेमगलंतिकया हिमांबु आनीय शंकरस्योपर्यपातयत् । "यदि तव मातुर्हृदयमानेष्यसीदं हिमांबु, नो चेन्मम दुःखाश्रु इति जानीही" ति ब्रुवन्ती निष्ठुरं कवाटावबन्ध्नात् । हिमांबु शंकरं सिक्त्वा कुट्टिमे पल्वलीभूतम् । दीपकांतिभिस्तस्मिन् जले शंकरस्य छायाऽपतत् । द्वारदेशे वेश्यावचनमंगीकृत्य साष्टांगपातं प्रणमन् शंकर इव सा छाया अदर्शि ।

शंकरः गृहं गत्वा जननीहृदयांबुजमवचित्य पुनर्वेश्यागृहं जगाम । तदा रात्रिरासीत् । कुमुदिनीविटेश्वरश्चन्द्रः प्रसारितग्रीव उन्नमितानन आश्चर्येण तं साहसिकं ददर्श ।

"सोऽहं शंकर आगतः । तव प्रीतये मातृहृदयं पुष्पमिव विलूय मयोपाहृतम् । द्वारमपावृणु" इति स उच्चैरवदत् । "बाढं कृत" मिति प्रशंसंती हेमलता कवाटावपावृणोत् । उत्कंठया शंकरे जवेनान्तर्गच्छति तत्करस्थितं तन्मातृहृदयं स्फुरत् स्फुरदेवमुवाच – "जलाकीर्णो मार्गः । शीघ्रं मा गच्छ । स्रस्तचरणः पतेः । जात ! मन्दं मन्दं गच्छ" इति ।

[श्रीवेलूरि शिवरामशास्त्रिविरचितात् "मातृहृदयम्" नामकात् आंध्रखण्डकाव्यात् अनूदितम् ]

—:0:—

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A. 3/65 Date 14—7—65

R. N. 8145/60. Postal R. No. H. 493.

वार्षिकम् रू. ४-००

# प्रहेलिके

अकुशं कुशलं तेऽद्य सजंभं कुचकुट्मलम् ।
तिरस्करोति सारंगशफरायितलोचने ॥

भावः — भृङ्गसदृशमत्स्यसदृशलोचनशालिनि हे प्रिये ! ते कुचकुट्मलं अद्य जंभप्रतीकसहितं, (अकुशं) कुवर्णशवर्णरहितं कुशलं (लं) नाम जंभलं = जंबीरं, (जंभजंबीरजंभाला इत्यमरः) तिरस्करोति । ते कुचकुट्मलं जंबीरसदृशमित्यर्थः ॥

कन्दर्पध्वजलांछने कठिनतावासे रसालिंगिते
प्रह्लादैकरसे क्रमादुपचिते भूभृद्गुरुत्वापहे ।
कोकस्पर्धिनि भोगभाजि जनितानंगे खलीनोन्मुखे
भाति श्रीरमणावतारदशकं बाले भवत्यास्तने ॥

भावः — बाले ! मकरपत्रलांछिते कठिने प्रीत्यालिंगिते आनन्दैकरसे क्रमप्रवृद्धे पर्वतादपि गुरूणि चक्रवाकसदृशे भोगाधारे मदनप्रेरके कंचुकलीनोद्गतचूचुके त्वदीये स्तने विष्णोर्दशावतारा भान्ति यथाक्रमम् । रसया भूम्या आलिंगतो वराहः ! भूभृतां राज्ञां, गुरुत्वापहः परशुरामः । कोकस्पर्धी कानां उदकानां ओकःस्थानं प्रति मार्गाऽदानात कुप्यतीति । श्रीरामः । भोगभाक् शेषांशत्वात बलरामः । जनितानङ्गः प्रद्युम्नपिता कृष्णः । खलीनोन्मुखः रश्मिधारी कल्किः ।



Published by Sri N. Ramanatha Iyer, B A., B L., Advocate &
Secretary S. B. P. Sabha, Chittoor.( A. P.)
Printed by Sri T. K. Thiruvengadacharya
at Vijaya Press, Chittoor. (A. P.) .C 1500.